तस्य पुत्रो ध्रुवं प्राप्तस् तस्य तस्येति चा परः ॥ १४

ते वयं राजवंशेन हीनास्सह सुतैरपि ।
अ[1]वज्ञाता भविष्यामो लोकस्य जगतीपते ॥ १५

ते वयं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवाम यथा राजंस् तथा शीघ्रं समर्थ्यताम् ॥ १६

अथ त्वमपि राजेन्द्र राजवंशो भविष्यसि ।
ध्रुवं लप्स्यामहे राज्यं वयमप्यवशा जने ॥ १७

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां आदिपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

॥ ७ ॥ संभवपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

[अस्मिन्नध्याये १७ श्लोकाः]

---

पूर्वतोऽनुवृत्तम्—

कुतोऽयमीदृशी बुद्धिः स्वपुत्रकुलनाशिनी ॥
वैपरीत्यं भवेत्किं नु तव पुत्रैर्नृपोत्तम ।
वद ते तात मेऽभीष्टं जीविष्याम कथं वयम् ॥
स एष पाण्डवो राज्यं यदि प्राप्नोत्यसंशयः ।
तत्पश्चात्तस्य पुत्रोऽभूत् तत्पुत्रश्चेति चापरः ॥
ते वयं राजवंशेन हीनास्सह सुतैरपि ॥ [अधिकः पाठः]

1. क-ख-ग-घ—वि

## ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥

दुर्योधनस्य पित्रा संवादः ॥ १ ॥

वैशंपायनः—

धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥ १

धर्मवृत्तस्सदा पाण्डुस् सुवृत्तो मयि गौरवात् ।
[1]सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ॥ २

नात्र किंचन जानाति भोजनानि चिकीर्षति ।
निवेदयति तत्सर्वं मयि धर्मभृतां वरः ॥ ३

तस्य पुत्रो यथा पाण्डुस् तथा धर्मपरस्सदा ।
गुणवांल्लोकविख्यातो नगरे च प्रतिष्ठितः ॥ ४

[2]स तथा वर्तमानोऽसौ धर्मसूनुर्यथाऽनुजः ।
[3]राज्यमेष हि संप्राप्तः ससहायो विशेषतः ॥ ५

ते तथा सत्कृतास्तात विषये पाण्डुना नराः ।

---

1. ख—भ्राता हि पाण्डुनाऽमात्यबलं च सततं ध्रुवम् ।
धृताःपुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ [अधिकः पाठः]
2. क-ख-घ—स कथं शक्यतेऽस्माभिरपाकर्ष्टुं नरर्षभः ।
3. क-ग-घ—भ्राता हि पाण्डुनाऽमात्यबलं च सततं धृतम् ।
धृताः पुत्राश्च पौत्रा श्च तेषामपि विशेषतः॥[अधिकः पाठः]

कथं युधिष्ठिरस्यार्थे न नो हन्युस्सबान्धवान् ॥ ६

नैते [1]विषयमिच्छेयुर् धर्म[2]त्यागे विशेषतः ।
ते वयं कौरवेयाणाम् एतेषां च महात्मनाम् ॥ ७

कथं न वाच्यतां तात गच्छेम जगतस्तथा ॥ ७॥

दुर्योधनः—

मध्यस्थस्सततं भीष्मो द्रोणपुत्रो मयि ध्रुवः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥ ८॥

कृपश्शारद्वतश्चैव यत एव वयं ततः ।
भागिनेयं ततो द्रौणिं न त्यक्ष्यति कथं चन[3] ॥ ९॥

[4]क्षत्ताऽर्थबन्धनस्त्वस्मान् पाण्डवार्थे न बाधितुम् ॥ १०

सुविस्रब्धान् पाण्डुसुतान् सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ॥ ११

---

1. क-ख-ग-घ—विषम
2. क-ख-ग-घ—नित्या
3. क-ग—क्षत्ताऽर्थबद्धस्त्वस्मासु प्रच्छन्नस्तु यतः परे ।
घ—क्षत्ता तु बन्धुरस्मासु प्रच्छन्नस्तु यतः परे । [अधिकः पाठः]
4. क-ग—न त्वेकस्स समर्थोऽस्मान् पाण्डवार्थे प्रबाधितुम् ।
घ—नैकस्सन् पाण्डवार्थेऽस्मान् समर्थो बाधितुं न हि ।

[1]विनिद्रावरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणा तेन नाशय ॥ १२

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां आदिपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
॥ ७ ॥ संभवपर्वणि एकाशीतितमोऽध्यायः[2] ॥ ८१ ॥
[अस्मिन्नध्याये १२ श्लोकाः]

## ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥

धृतराष्ट्रादीनां कणिङ्केन दुर्नीत्युपदेशः ॥१॥ जम्बुकोपाख्यानम् ॥२॥

वैशम्पायनः—
ततः कणिङ्कमानाय्य धृतराष्ट्रोऽब्रवीदिदम् ॥ ॥
धृतराष्ट्र —
उत्सिक्ताः पाण्डवा नित्यं तेभ्योऽसूयामि वै सदा ।
तत्र मे सहपुत्रस्य यद्भवेत् क्षेमकारकम् ॥ १॥
कणिङ्क तत् त्वमाचक्ष्व करिष्यामः कथं वयम् ॥ २
वैशंपायनः—
संप्रपन्नाय तस्मै स परिपृष्टोऽर्थचिन्तया ।

1. क-ग—निद्राया हरणं ; ख-घ—विनिद्राकरणं
2. क-ग—सप्तसप्ततितमोऽध्यायः ॥
ख-कोशे—अष्टसप्ततितमोऽध्यायः ॥
घ-कोशे—एकोनाशीतितमोऽध्यायः ॥

उवाच वचनं तीक्ष्णं राजशास्त्रनिदर्शनात् ॥ ३

कणिङ्कः—

नित्यमुद्यतदण्डस्यान्नित्यं च कृतपौरुषः ।
न शत्रुरक्षापतितो न मोक्तव्यः कथञ्चन ॥ ४

[1]कण्टको हि दुरुच्छिन्न आस्रावं जनयेच्चिरम् ।

---

1. क-ख-ग-घ—दुर्योधनोऽथ शकुनिः कर्णो दुश्शासनस्तथा ।
कणिङ्कमुपसंगम्य मन्त्रिणं सौबलस्य च ॥
पप्रच्छ भरतश्रेष्ठ पाण्डवान् प्रति नैकधा ।
प्रवृद्धाः पाण्डवा ह्येते नित्यं तेभ्यस्त्रसाम्यहम् ॥
तत मेऽपि सपक्षस्य यद्भवेत्क्षेमकारकम् ॥
कणिङ्क तत्त्वमाचक्ष्व करिष्यामः कथं वयम् ॥

वैशम्पायनः—

संप्रपच्छाय तस्मै स परामृश्यार्थचिन्तया ।
उवाच वचनं तीक्ष्णं राजशास्त्रनिदर्शनम् ॥

कणिङ्कः—

नित्यमुद्यतदण्डश्च नित्यमुद्यतपौरुषः ।
नित्यं च ब्राह्मणाः पूज्या नृपेण हितमिच्छता ॥
सृष्टो नृपो हि विप्रस्य पालने दुष्टनिग्रहे ।
उभाभ्यां वर्धते धर्मो धर्मवृद्ध्या जितावुभौ ॥
लोकश्चायं परश्चैव तस्माद्धर्मं समाचरेत् ।
अच्छिद्रश्छिद्रदर्शी स्यात् परेषां विवरानुगः ॥
नित्यमुद्यत दण्डाद्धि नित्यमुद्विजते जनः ।
तस्मात्सर्वाणि भूतानि दण्डेनैवाभिपालयेत् ॥
कृतापराधं पुरुषं दृष्ट्वा यः क्षमते नृपः ।
तेनावमानमाप्नोति पापं चेह परत्र च ॥
यो विभूतिमवाप्योच्चै राज्ञो विकुरुते मनः ।

वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ॥ ३

[1]निरुद्विग्नो हि भवति हत्वा च रिपुमोजसा ॥ ३॥

हन्यादमित्रं दण्डेन हन्यात् पूर्वापकारिणम् ।

हन्यात् त्रीन् पञ्च सप्तेति परपक्षस्य सर्वशः ॥ ४॥

[2]कुलमेवादितश्छिन्द्यात् परपक्षस्य नित्यशः ।

ततोऽस्यानन्तरं पक्षान् छिन्द्यात् सर्वानशेषतः ॥ ५॥

छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।

कथं नु शाखास्तिष्ठेयुश् छिन्नमूले वनस्पतौ ॥ ६॥

सुविक्रान्तं सुविस्तीर्णं सुयुद्धं सुपलायनम् ।

आपदामथ कालेषु कुर्यान्नात्र विचारणा ॥ ७॥

---

पूर्वतोऽनुवृत्तम्—

तमानयित्वा दत्वा च दद्याद्दीनाय तद्धनम् ॥
ये चेद्धुरि नियुक्ता ये स्थास्यन्ति वशमात्मनः ।
राज्ञा नियुञ्ज्यात् पुरुषानाप्तान् धर्मार्थकोविदान् ॥
ये नियुक्तास्तया केचिद्राष्ट्रं वा यदि वा पुरम् ।
ग्रामं जनपदं वापि बोधेयु र्यदि वा न वा ॥
परीक्षणार्थं विसृजेदानलाञ्छन्नरूपिणः ।
परीक्ष्य पावकं जह्याद्धनमादाय सर्वशः ॥
नास्य च्छिद्रं नरः पश्येच्छिद्रेण परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
नासम्यक्कृत्यकारी स्यादुपक्रम्य कदाचन ॥

[अधिकः पाठः]

1. घ—विषदन्तस्य भक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ [अधिकः पाठः]

2. क-ख-ग-घ—मूल

कथं नु परियास्यामो न च ज्ञायामहे वयम् ।
दातृत्वेन [1]ग्रहीष्यामो भेदतो दण्डतोऽपिवा ॥　　८॥

अन्धस्स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ।
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ॥　　९॥

एकत्र वाऽपि वसतो नित्यं विवरदर्शितम् ।
राजन्नाक्षत्रसंपन्नो नित्योद्विग्नस्ततो भवेत् ॥　　१०॥

अग्न्याधानेन यज्ञेन [2]काषायधरणेन च ।
लोकं प्रस्नापयित्वा च तथा लुम्पेद्यथा वृकः ॥　　११॥

अङ्कुशं शौचमित्याहुर् अर्थानामुपधारणे ।
आनाम्य फलिनीं शाखां पक्वं पक्वं प्रशातयेत् ॥　　१२॥

वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
ततः काल उपादाय भिन्द्याद्घटमिवाश्मनि ॥　　१३॥

[3]अमित्रस्तु न मोक्तव्यः कृपणं बह्वपि ब्रुवन् ।

---

1. क-ख-घ—गृहीताश्च नच पृच्छेम कर्हिचित् ।
2. क-ख-ग-घ—काषायाभ्यअनाजिनैः ।
3. घ—उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ।
　　क्रुद्धोप्यक्रुद्धरूपस्स्यात् स्मितपूर्वाभिभाषिता ॥
　　न चैनं क्रोधसन्दीप्तं विद्यात् कश्चित् कथञ्चन ।
　　प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ॥
　　प्रहृत्य च कृपायेतच्छोचन्नित च रुदन्नित च ।
　　आश्वासये च्चैव परं सामधर्मार्थवृत्तिभिः ॥
　　अथ तं प्रहरेत् काले तथा विचलितं पथि ॥　　[अधिकः पाठः]

दुःखं तस्मिन्नकर्तव्यं विध्यादेवापकारिणम् ॥ १४॥

हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ।
तथा भेदेन दण्डेन सर्वोपायैः प्रमापयेत् ॥ १५॥

धृतराष्ट्रः—

कथं सान्त्वेन दानेन भेदैर्दण्डैरथापि च ।
अमित्रश्शक्यते हन्तुं तन्मे ब्रूहि यथातथम् ॥ १६॥

कणिङ्कः—

शृणु राजन् यथा वृत्तं वने वसति जम्बुकः ।
सखायस्तस्य व्याघ्रश्च वृको नकुलमूषिकौ ॥ १७॥

ते पश्यन्ति वने तस्मिन् बलिनं मृगयूथपम् ।
अशक्ता ग्रहणे तस्य ततो मन्त्रमकुर्वत ॥ १८॥

जम्बुकः—

असकृद्यतितो ह्येष हन्तुं व्याघ्र त्वयाऽनघ ।
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ॥ १९॥

मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ।
अथैनं भक्षितैः पादैर् मृगं व्याघ्रो हनेत्तदा ॥ २०॥
ततस्तं भक्षयिष्यामः सर्वे मुदितमानसाः ॥ २१

कणिङ्कः—

जम्बुकस्य तु ते वाक्यं तथा चक्रुस्समाहिताः ।
मूषिकाभक्षितैः पादैर् मृगं व्याघ्रोऽहनत्तदा ॥ २२

जम्बुकः—

स्नात्वाऽऽगच्छत भद्रं वो रक्षामि मृगयूथपम् ॥ २२॥

वैशम्पायनः—

शृगालवचनात्त्वाऽपि गतास्सर्वे नदीं ततः ।
स चिन्तयानो मनसा मांसतृप्तिं पुनः पुनः ॥ २३॥

अथागच्छत्तु पूर्वं हि स्नात्वा व्याघ्रो महाबलः ।
जम्बुकश्च भवत्तत्र तदा चिन्ताकुलो नृप ॥ २४॥

व्याघ्रः—

किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
पिशितस्याशितारोऽत्र विहरिष्यामहे सुखम् ॥ २५॥

जम्बुकः—

शृणु मे त्व महाप्राज्ञ यां वाचं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाऽद्यायं मृगो हतः ॥ २६॥

मद्बाहुबलमाश्रित्य तृप्तिर्यस्य भविष्यति ।
तस्यैवं गदतस्त्वद्य ततो भक्ष्यं न रोचये ॥ २७॥

व्याघ्रः—

यद्येवमब्रवीत् सोऽस्मान् काले चास्म्यवबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥ २८॥
खादिष्यामि च मांसानि हीत्युक्त्वा प्रस्थितो वनम् ॥ २९

कणिङ्कः—

एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥ २९॥

जम्बुकः—

शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ।
मृगमांसं न खादेयं [1]सख्यमस्माद्विधस्य तत् ॥ ३०॥
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥ ३१

कणिङ्कः—

तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्राद्रवद्भयात् ।
ततस्स्नातस्तदा तत्र आजगाम वृको नृप ॥ ३२

जम्बुकः—

मृगराजो हि संक्रुद्धो न नस्साधु भविष्यति ।
सकलत्रस्समायाति कुरुष्व यदनन्तरम् ॥ ३३

कणिङ्कः—

एवं संचोदितस्तेन जम्बुकेन तदा वृकः ।
[2]भीतोऽवलिप्तं कृत्वाऽथ प्रयातः पिशिताशनः ॥ ३४
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ।
तमुवाच ततो राजन् नकुलं जम्बुको वने ॥ ३५

जम्बुकः—

स्वबाहुबलमाश्रित्य निर्जितास्ते समागताः ।
मम दत्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ॥ ३६

---

1. क-ख-ग—कथम
2. अ—हिते स लुप्तं क्षुत्वाऽथ प्रयाताः पिशिताशनाः ।

नकुलः—

मृगराजो वृकश्चैव बुद्धिमांश्चैव मूषिकः ।
निर्जितो वै त्वया वीर तस्माद्वीरतरो भवान् ॥　　३७
नाहमप्युत्सहे योद्धुम् इत्युक्त्वा गां विवेश ह ॥　　३७॥

कणिङ्कः—

एवं तेष्वपयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसम् इत्येवं मन्त्रनिश्चयात् ॥　　३८॥
[1]एतत्ते कथितं राजन् शृणु चाप्यपरं नृप ॥　　३९
पुत्रस्सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
अर्थे पर्यवतिष्ठेरन् [2]कर्तव्या भूमिवर्धनाः ॥　　४०
शपथेनाप्यरिं हन्यान्नदोष इति भार्गवः ।
उभौ यदि शपेयातां श्रद्दधानस्तु वध्यते ॥　　४१
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥　　४२
क्रुद्धोऽप्यक्रुद्धरूपस्स्याच्च् छुक्लः पूर्वाभिभाषिता ।
न चैनं क्रोधसंदीप्तं विद्यात् कश्चित् कथंचन ॥　　४३

---

1. क-ख-ग-घ—भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन सख्याच्चैव समौजसम् ॥
[अधिकः पाठः]

2. क-क-ग—हन्तव्या भूरिवर्धनैः

प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि [1]भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥ ४४

आश्वासयेच्चैव परं सामदानादिवृत्तिभिः ।
अथ तं प्रहरेत् काले तथा विचलितं पथि ॥ ४५

अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।
[2]स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ॥ ४६

यस्य स्यात्तु [3]वधस्तस्य नास्त्यगारोपदीपनम् ।
अधनान् भिक्षुकं चोरान् विषकर्मसु योजयेत् ॥ ४७

प्रत्युत्थानासनाद्येन संप्रदानेन केन चित् ।
प्रतिप्रस्कन्नघाती स्यात् तीक्ष्णदंष्ट्र इवोरगः ॥ ४८

अशङ्कितेभ्यश्शङ्केत शङ्कितेभ्यश्च सर्वदा ।
अशङ्क्याद्भयमुत्पन्नम् अपि मूलान्निकृन्तति ॥ ४९

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वस्तः क्षयमाप्नोति तस्मात्सर्वं न विश्वसेत् ॥ ५०

चारास्सुविहिताः कार्या आत्मनश्च परस्य च ।
पाषण्डब्राह्मणादींश्च परराष्ट्रेषु योजयेत् ॥ ५१

---

1. क-ख-ग—भूमिप
2. क-ख-ग—अपि प्रच्छाद्यते दोषो घनैरर्क इवासितैः ।
3. क-ख-ग-घ—व धः प्राप्तस्तस्यागारोपदीपनम्

[1]उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु वेशेषु चत्वरेषु सभासु च ॥ ५२

ब्राह्मणायतने द्यूते पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥ ५३

वाचा भृशं विनी[2]तस्स्याद्धृदयेषु तथा क्षुरः ।
शुक्लं पूर्वाभिभाषी स्यात् सृष्टो रौद्राय कर्मणे ॥ ५४

अञ्जलिश्शपथस्सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येतत् कर्तव्यं भूतिमिच्छता ॥ ५५

सुपुष्पितस्स्यादफलः दुरारोहः फलान्वितः ।
आमस्स्यात् पक्वसङ्काशो न च जीर्येत कस्य चित् ॥ ५६

त्रिवर्गे त्रिविधा पीडा अनुबन्धास्तथैव च ।
अनुबन्धांस्तु सेवेत पीडास्तु परिवर्जयेत् ॥ ५७

धर्मोऽतिचरितः पीडां सह द्वाभ्यां निगच्छति ।
अर्थश्चाप्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ॥ ५८

अगर्वितात्मा युक्तश्च शान्तियुक्तो न चेच्छुकः ।

---

1. क-ख-ग—स्वराष्ट्रे विदितांश्चारान् परीक्षार्थे मुहुर्मुहुः ।
स्वकीयान् वीर दोषेषु रक्षार्थं विसृजेन्नृप ॥
नृपः—　　[अधिकः पाठः]

2. क-ख-ग-घ—तश्च हृदयेन तदा

[1]अवेक्षितात्मा शुद्धात्मा मन्त्रयेत द्विजैस्सह ॥ ५९

मृदुना केनचिद्राजन् कर्मणा दारुणेन वा ।
[2]उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ६०

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं [3]तु समारुह्य यदि जीवति पश्यति ॥ ६१

[4]अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ।

वैरिणा सन्धिमास्थाय शयीत कृतकृत्यवत् ॥ ६२
स वृक्षाग्रे यथा सुप्तः पतन्नेव विबुध्यते ॥ ६२॥

मंत्रसंवरणे यत्नस् सदा कार्योऽनसूयता ।
आकार आत्मनो रक्ष्यश् चारेणाभ्यनुपालितः ॥ ६३॥

[5]नाच्छित्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।

---

1. क-ख-ग—आशाकृताप्ययुक्तश्च सान्त्वशीलो न चोज्ज्वलः । [अधिकः पाठः]

2. क-ख-ग—तृतीयेन नचान्येन व्रजेन्निश्चयमापदि । [अधिकः पाठः]

3. क-ख-ग—पुनरारुह्य यदि जीवति वा न वा ।

4. घ—यस्य बुद्धिः परिभवेत् तमतीतेन सान्त्वयेत् ।
   ङ—यं सुबुध्या परिभवेत् तमतीतेन सान्त्वयेत् ।
   ख—ऋजुबुद्धिं परिभवेत् तमतीतेन सान्त्वयेत् ।

5. क-ख-ग—न रात्रौ मन्त्रयेद्विद्वान् न च कैश्चिदुपासितः ।
   प्रासादाग्रे शिलाग्रे वा विशाले विजनेऽपि वा ॥

[1]नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ ६४॥

कर्शितं [2]व्याधितं श्रान्तम् अपनीतमनायकम् ।
परिविश्वस्तमल्पं च प्रहर्तव्यं रिपोर्बलम् ॥ ६५॥

नानर्थकेऽर्थबन्धोऽस्ति कृतार्थे नास्ति सङ्गतम् ।
तस्मात् सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ ६६॥

पूर्वतोऽनुवृत्तम्—

समन्तात् तत्र पश्यद्भिस् महासैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकाम् ॥
शुकान् वा शारिकां वापि बालमूकजडानपि ।
प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ॥
नीतिज्ञैर्न्यायशास्त्रज्ञैर् इतिहासेषु निष्ठितैः ।
रक्षामन्त्रस्य निस्त्रावं मन्त्रान्ते निश्चयेद् बुधः ॥
वीरोपवर्णितं यत्तद् धर्मार्थाभ्यामथात्मना ।
एकेन वाऽथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ॥
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णश्छिद्यते मन्त्र इति नीतिषु पठ्यते ॥
निस्सृतो नाशयेन्मन्त्रो ह्यप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च संविचार्य पुनः पुनः ॥
गुणवद्वाक्यमादद्यान्नैव कुर्याद्विचक्षणः ।
आकारं चात्मनो रक्ष्यं चारयोग्यं च सर्वदा ॥

[अधिकः पाठः]

1. क-ख-ग—प्राप्नोति महतीं लक्ष्मीं नाहत्वा मत्स्यबन्धनः ।

2. क-ख-ग—तृषितं शान्तं विपरीतं

संग्रहे [1]विग्रहे चैव यत्नः कार्योऽनसूयता ।
[2]निग्रहः कालयुक्तश्च कर्तव्यो भूतिमिच्छता ॥ ६७॥

नास्य कृत्यानि पश्येयुर् मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येयुस् सुपर्यवसितानि च ॥ ६८॥

भीतवत् संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ६९॥

दैवतोपहतं शत्रुं प्रगृह्णाति च यो नृपः ।
[3]स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ७०॥

अनागतं च बुध्येत यच्च कार्यमुपस्थितम् ।
न तु बुद्धिक्षयात्किंचिद् अतिक्रान्त[4]मवेक्ष्यते ॥ ७१॥

उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ तु सेव्या धर्मादयस्त्रयः ॥ ७२॥

[5]निश्श्रेयसाय ते ज्ञेया इह चामुत्र च स्थिताः ।
बलवत् कुरुते रूपं बाल्याच्छत्रुरुपेक्षितः ॥ ७३॥

---

1. क-ख-ग-घ—निग्रहे 2. क-ग-घ—विग्रहः

3. घ—तत्कालोपचयोद्योगे दृष्ट्वा हन्यान्न संशयः । [अधिकः पाठः]

4. क-ख-ग-घ—मपेक्षयेत् ।

5. क-ख-ग—निश्श्रेयसा हि तौ ज्ञेयाविह चामुत्र च स्थितौ ।
घ—श्रेयसे च स ते ज्ञेया इह चामुत्र चास्थिराः ॥

गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ।
अग्निं स्तोकमिवात्मानं सन्धुक्षयति पण्डितः ॥ ७४॥

स वर्धमानो ग्रसते महान्तमपि संचयम् ॥ ७५

आदावेव ददानीति प्रियं ब्रूयान्निरर्थकम् ।
आशां कालवतीं कुर्यात् कालं विघ्नेन योजयेत् ॥ ७६

विघ्नं निमित्ततो ब्रूयान्निमित्तानि च हेतुतः ॥ ७६॥

क्षुरो भूत्वा दहन्नेव निशितः कलिचारतः ।
प्रच्छन्नो रोमवापी स्याद् द्विषतां चावकर्तनः ॥ ७७॥

[1]पाण्डवांश्च तथा राजन् अन्यांश्चापि गुरून् प्रति ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥ ७८॥

न हि कुर्यात् समुत्सन्नान् विनष्टा इति निश्चयम् ।
तस्मात् त्वमपि पुत्रेभ्यो रक्षाऽऽत्मानं नराधिप ॥ ७९॥

भ्रातृव्या बलवन्तस्ते पाण्डुपुत्रा नराधिप ।
ब्रवीमि तस्माद्विस्पष्टं यत्कर्तव्यमरिन्दम ॥ ८०॥

---

1. च—आत्मलोभार्थकारी स्याद् यो नरो भुवि भूपते ।
पुत्रं वा यदि वा पौत्रं भ्रातरं भ्रातृसन्ततिम् ।
गुरुं मित्रं च सुहृदं सुखेप्सुः परिवर्जयेत् ॥ [अधिकः पाठः]

वैशंपायनः—

एवमुक्त्वा संप्रतस्थे कणिङ्कस्स्वगृहं ततः ।

तदा सपुत्रो राजा च शोकार्तस्समपद्यत ॥ ८१॥

इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्याम्
आदिपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

॥ ७ ॥ संभवपर्वणि द्व्यशीतितमोऽध्यायः[1] ॥ ८२ ॥

॥ संभवपर्व समाप्तम् ॥

[अस्मिन्नध्याये ८१॥ श्लोकाः]

---

अतःपरं जतुगृहदाहपर्व भविष्यति

तस्यायमाद्यः श्लोकः—

वैशम्पायनः—

कणिङ्कस्य मतं ज्ञात्वा कार्त्स्न्येन भरतर्षभ ।

दुर्योधनश्च कर्णश्च शकुनिस्सौबलस्तथा ॥

इति

---

1. क-कोशे-ग-कोशे च—अष्टसप्ततितमोऽध्यायः ।
ख-कोशे—एकोनाशीतितमोऽध्यायः ।
घ-कोशे—अशीतितमोऽध्यायः ।

॥ श्रीरस्तु ॥

## महाभारतस्य आदिपर्वप्रथमसम्पुटस्थानां विषयाणाम्

## अक्षरमातृकाक्रमेण सूचनम्


| | अध्यायः-पुटम् |
|---|---|
| अक्षौहिण्यादिपरिमाणकथनम् | २—४५ |
| अग्निना भृगुभार्येति प्रत्युत्तरदानम् | ४-१०५ |
| अग्निना क्रोधेन स्वात्मोपसंहारः | ६-१०९ |
| अग्नौ सर्पपतनम् | ४३-२६२ |
| अदित्यादिदक्षकन्यावंशकथनम् | ५६-३५० |
| अधर्मोत्पत्तिः-तद्वंशश्च | ५७-३६३ |
| अनुनिकटे जरासङ्क्रामण प्रार्थना | ६८-४४४ |
| अमृतकलशसहितधन्वन्तर्युत्पत्तिः | १३-१४१ |
| अम्बाया भीष्मेण सह संवादः | ९६-६२६ |
| अम्बाया भीष्मेण विसर्जनम् | ९६-६२८ |
| अम्बया साल्वं प्रति गमनम् | ९६-६२९ |
| अम्बाया हिमालये तपःकरणम् | ९६-६३० |
| अम्बया पाञ्चालराजसोमकगमनम् | ९७-६३२ |
| अम्बालिकायां पाण्डोरुत्पत्तिः | १०२-६६२ |
| अम्बिकाम्बालिकयोर्विचित्रवीर्येण सह विवाहः | ९६-६२७ |
| अम्बिकादास्यां विदुरस्योत्पत्तिः | १०२-६६४ |
| अम्बिकाम्बालिकयोः पुत्रोत्पत्तये सत्यवत्या भीष्मनियमनम् | ९८-६३७ |
| अर्जुनजननम् | ११३-७४० |
| अर्जुनेन द्रुपदग्रहणम् | १३१-८६७ |
| अर्जुनेन द्रोणाय गुरुदक्षिणादानम् | १३४-८९२ |
| अर्जुनपरीक्षा | १२८-८४५ |

| | अध्यायः-पुटम् |
|---|---|
| अश्वत्थाम्न उत्पत्तिः | १२२-८०६ |
| अश्वत्थाम्ने क्षीरार्थं पिष्टोदकदानेन प्रलोभनं सखिभिःकुमारैः परिहासश्च | १२४-८१७ |
| अष्टकययातिसंवादः | ७२-४५८ |
| अष्टकययातिसंवादे मृतस्य पुनर्जननप्रकारकथनम् | ७४-४६६ |
| अष्टकययात्योः पुनस्संवादः | ७७-४८४ |
| अष्टमपुत्रहननकाले गङ्गां प्रति शन्तनोः प्रश्नः | ९१-५९२ |
| अष्टमपुत्रस्य देवव्रत इति गङ्गादत्त इति च नामद्वयकथनम् | ९१-५९३ |
| अष्टवसूनां सभार्याणां वनगमनम् | ९२-५९४ |
| अस्तीकोपाख्यानं प्रति शौनकप्रश्नः | ९-१२३ |
| अस्तीकोत्पत्तिः | १०-१२८ |
| अस्तीकोत्पत्तिः—अस्तीकेतिनामनिर्वचनम् | ४०-२४७ |
| अस्तीकस्य स्वमात्रा संवादः | ४५-२६६ |
| अस्तीकेन वासुकेराश्वासनम् | ४५-२६८ |
| अस्तीकेन सर्पसत्रगमनम् | ४५-२७० |
| अस्तीककृतजनमेजययज्ञप्रशंसा | ४५-२७० |
| अस्तीकस्य सर्पेभ्यो वरलाभः | ४८-२८६ |
| आकाशवाणीश्रवणम् | ८८-५६४ |
| आणिमाण्डव्येन यमस्य शापः | १०३-६७० |
| आदिशेषेण तपश्चरणम् | २८-१९८ |
| आदिपर्वसंक्षेपवृत्तान्ताध्यायश्लोकसंख्या | २—५२ |
| आनुशासनिकपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६८ |
| आरण्यपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—५६ |
| आरुण्युपाख्यानम् | ३—७७ |
| आरुणिपाञ्चालस्य उद्दालकेतिनामप्राप्तिः | ३—७८ |
| आश्रमवासपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६९ |
| आश्वमेधिकपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६९ |
| इन्द्रवज्रप्रहारेण गरुडेनेन्द्राय स्वबलप्रकाशाय पक्षैकदेशविसर्जनम् | २५-१८९ |

अध्यायः–पुटम्

इन्द्रगरुडसख्यम् २६–१९०
इन्द्रस्य सतक्षकस्य सर्पसत्रे आगमनम् ४६–२७८
इन्द्रस्य भयेन तक्षकं त्यक्त्वा स्वभवनगमनम् ४६–२७८
इन्द्रययातिसंवादः ७१–४५३
इन्द्रमेनकासंवादः ८२–५११
इन्द्रेण विमानादिदानेन उपरिचरवसोस्तपसो निवर्तनम् ५३–३१८
इन्द्रेण वायुभूतेन कन्यानां वस्त्रविमिश्रणम् ६२–४०४
उचथ्यभार्यायां ममतायां गर्भिण्यां बृहस्पतिना कामावेदनम् ९९–६४१
उच्चैःश्रवसो दर्शनाय कद्रूविनतयोर्गमनम् १६–१५०
उत्तरयायातारम्भः ७०–४५१
उत्तरयायातसमाप्तिः ७७–४९१
उदङ्केन गुरवे दक्षिणादानाय प्रयतने गुरुपत्नीनिदेशेन पौष्यपत्नीकुण्डलाहरणाय पौष्यसमीपगमनम् ३—८७
उदङ्केन नागलोकं प्रविश्य तक्षकात् कुण्डले समाहृत्य गुरुपत्न्यै समर्पणम् ३—९६
उदङ्केन जनमेजयं प्रति सर्पसत्रकरणचोदनम् ३—९९
उद्दालककथा १०९–७१६
उद्योगपर्ववृत्तान्ताध्यायश्लोकसंख्या २—६०
उपमन्यूपाख्यानम् ३—१८
उपमन्युना धौम्योपदेशेनाश्विनोःस्तुतिः ३—८१
उपरिचरवसुराजोपाख्यानम् ५३–३१६
उपयाजेन याजोपसर्पणकथनम् १३२–८७८
ऋतुमत्या उपाध्यायान्या ऋतोरवन्ध्यताकरणनिदेशस्य उदङ्केन प्रत्याख्यानम् ३—८६
ऋत्विग्जनमेजयसंवादः ४६–२७५
ऋषिभिः भारतकथनचोदना १—८
ऋषिणा तेन प्रद्वेषीब्राह्मणीविवाहः ९९–६४२
ऋषिभिः पाण्डोर्मरणकथनपूर्वकं पाण्डवानां भीष्मादिहस्ते-प्रतिपादनम् ११६–७७५

| | अध्यायः-पुटम् |
|---|---|
| ऋषेर्जरत्कारुनामव्युत्पत्तिः | ३२-२११ |
| ऋषेस्तस्य गङ्गायां प्लवेन पातनम् | ९९-६४४ |
| ऋष्यादिवंशकथनम् | ५७-३५७ |
| एकलव्येन पाण्डवेभ्यस्स्वस्य द्रोणशिष्यत्वख्यापनम् | १२५-८२९ |
| एलापत्रभाषणम् | ३०-२०६ |
| एलापत्रेण देवब्रह्मसंवादमुखेनास्तीकोत्पत्तिकथनम् | ३०-२०७ |
| एलापत्रोपदेशेन वासुकिभगिन्या जरत्कार्वा रक्षणम् | ३१-२०९ |
| कचशुक्रसंवादः | ६०-३८९ |
| कचमुद्दिश्य शुक्रसमीपे देवयानीवाक्यम् | ६०-३९१ |
| कचस्य सञ्जीविन्या विद्यया प्रत्युज्जीवनम् | ६०-३९१ |
| कचस्य पुनर्दानवैर्हननम् | ६०-३९२ |
| कचस्य पुनश्शुक्रेण सञ्जीवनम् | ६०-३९२ |
| कचस्य पुनरसुरैःपेषणेन सुरया सह शुक्राय दानम् | ६०-३९३ |
| कचस्य शुक्रात् सञ्जीविनीविद्याप्राप्तिः | ६०-३९७ |
| कचदेवयान्योस्संवादः | ६१-४०० |
| कचदेवयान्योः परस्परं शापः | ६१-४०२ |
| कचस्य देवलोकागमनम् | ६१-४०३ |
| कणिकेन धृतराष्ट्राय दुर्नीत्युपदेशः | १३७-९०४ |
| कण्वस्य स्वाश्रमं प्रत्यागमनम् | ८४-५२४ |
| कण्वाश्रमे दुष्यन्तशकुन्तलासंवादः | ८२-५०६ |
| कण्वाच्छकुन्तलाया वरलाभः | ८४-५२७ |
| कण्वेन शकुन्तलाया वनादानयनम् | ८३-५१७ |
| कर्णपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६४ |
| कर्णस्य स्वप्ने सूर्येण बोधनम् | १०५-६८५ |
| कर्णेनेन्द्राय कवचकुण्डलदानम् | १०५-६८६ |
| कर्णस्य रङ्गप्रवेशः | १२९-८४९ |
| कर्णपितुरधिरथस्य रङ्गप्रवेशः | १३०-८५५ |
| कर्णस्य भीमेनाधिक्षेपः | १३०-८५६ |
| कर्णार्जुनयोर्युद्धप्रसङ्गः | १२९-८५१ |

| | अध्यायः-पुटम् |
|---|---|
| कद्रूविनतयोः काश्यपाद्वरलाभः | ११-१३० |
| कद्रूविनतयोः पणबन्धः | १५-१४८ |
| कद्रूतः सर्पाणां शापः | १५-१४८ |
| कद्रूविनतयोस्समुद्रदर्शनम् | १६-१५१ |
| कद्रूस्तुत्या तुष्टेनेन्द्रेण जलवर्षणम् | १९-१६० |
| कद्र्वां सर्पाणां जननम् | ११-१३१ |
| कद्र्वा कृतेन्द्रस्तुतिः | १८-१५८ |
| कार्कोटकेन कद्रूवाक्याङ्गीकारः | १५-१४९ |
| काश्यपेन गजकच्छपपूर्ववृत्तकथनम् | २१-१६८ |
| काश्यपाज्ञया गरुडेन गजकच्छपग्रहणम् | २१-१७० |
| काश्यपप्रार्थनया वालखिल्यानां हिमालयगमनम् | २२-१७४ |
| काश्यपेन जातकर्मादिसंस्कारकरणम् | ११४-७५५ |
| कुन्तीमाद्र्योरपि पाण्डुना सह वनगमनम् | १०७-६९९ |
| कुन्त्यां यमप्रसादाद्युधिष्ठिरस्य उत्पत्तिः | ११०-७२३ |
| कुन्तीमाद्र्योः प्रलापः | ११५-७६१ |
| कुन्तीमाद्र्योः ऋषिभिराश्वासनम् | ११५-७६७ |
| कुमारस्वामिना दत्तायास्स्रजः शिखण्डिन्या कण्ठेऽवमोचनम् | ९७-६३३ |
| कुमाराणां विहारवर्णनम् | ११९-७८६ |
| कुरुवंशकथनम् | ५९-३७९ |
| कृपाचार्योत्पत्तिः | १२१-८०० |
| कृपात्पाण्डवादीनां धनुर्वेदाध्ययनम् | १२१-८०२ |
| कृपाचार्येण कर्णस्याधिक्षेपः | १२९-८५३ |
| गजकच्छपभक्षणम् | २२-१७५ |
| गजकच्छपयुद्धविवरणम् | २१-१६९ |
| गङ्गायाः स्त्रीरूपेण प्रतीपसमीपगमनम् | ९०-५८२ |
| गङ्गाप्रतीपसंवादः | ९०-५८२ |
| गङ्गया शन्तनुजातसप्तपुत्राणां जले क्षेपणम् | ९१-५९२ |
| गङ्गाया भीष्ममादाय गमनम् | ९२-६०० |

| | अध्यायः-पुटम् |
|---|---|
| गङ्गाप्रवाहस्य शरैस्स्तम्भनं कुर्वतो बालकस्य दर्शनम् | ९३-६०४ |
| गङ्गया शन्तनवे देवव्रतसमर्पणम् | ९३-६०५ |
| गन्धर्वात् शिखण्डिन्याः पुंस्त्वलाभः | ९७-६३४ |
| गरुडोत्पत्तिः | १७-१५२ |
| गरुडेन स्वतेजः प्रतिसंहारः | १७-१५६ |
| गरुडवहनेन सर्पाणामुत्तमप्रदेशप्राप्तिः | २०-१६१ |
| गरुडेन विनतां प्रति दास्यकारणप्रश्नः | २०-१६२ |
| गरुडेन सर्पान्प्रति दास्यमोचनोपायप्रश्नः | २०-१६३ |
| गरुडस्यामृताहरणोद्योगः | २०-१६३ |
| गरुडेन निषादभक्षणम् | २०-१६५ |
| गरुडेन कण्ठं दहतो ब्राह्मणस्य सपत्नीकस्य परित्राणम् | २१-१६६ |
| गरुडस्य काश्यपेन संवादः | २१-१६७ |
| गरुडेन रोचनपादपशाखाभङ्गः | २१-१७१ |
| गरुडेन लम्बमानवालखिल्यरक्षणाय भग्नशाखाग्रहणम् | २२-१७२ |
| गरुडेन अमृतसमीपगमनम् | २४-१८६ |
| गरुडेन अमृताहरणम् | २५-१८७ |
| गरुडेन विष्णोर्वरप्राप्तिः | २५-१८९ |
| गरुडस्य सुपर्णनामप्राप्तिः | २५-१९० |
| गरुडस्येन्द्रात् सर्पभक्षणवरप्राप्तिः | २६-१९२ |
| गर्भस्थेन शिशुना बृहस्पतिनिवारणम् | ९९-६४२ |
| गवाश्वादीनामुत्पत्तिः | ५७-३६५ |
| गान्धार्या स्वोदरघातनम् | ११०-७२६ |
| गान्धार्यां दुश्शलाया उत्पत्तिः | १११-७३४ |
| गिरिकायाः पौष्यस्य चोत्पत्तिः | ५३-३२२ |
| गौरमुखपरीक्षित्संवादः | ३४-२२२ |
| गौतमस्य शरद्वतः जालवत्या दर्शनेन मनोविकारः | १२१-८०१ |
| चतुर्मुखस्य व्याससमीपं प्रत्यागमनम् | १—१४ |
| चतुर्मुखेन महाभारतस्य सर्वोत्कृष्टत्ववरदानम् | १—१७ |
| चन्द्रलक्ष्मीसुराणां कौस्तुभपारिजातसुरभीणां ऐरावतस्य चोत्पत्तिः | १३-१४० |

| | अध्यायः-पुटम् |
|---|---|
| चित्राङ्गदस्य तन्नाम्ना गन्धर्वेण वधः | ९५-६१८ |
| च्यवनजननरक्षोविनाशौ | ५-१०६ |
| च्यवनसन्ततिकथनम् | ७-११२ |
| जनमेजयभ्रातॄणां श्रुतसेनोग्रसेनभीमसेनानां नामकथनम् | ३—७४ |
| जनमेजययागे सारमेयागमनम् | ३—७४ |
| जनमेजयस्य राज्याभिषेकः | ३६-२३१ |
| जनमेजयस्य वपुष्टमया विवाहः | ३६-२३२ |
| जनमेजयस्य राज्यं शासतः कलियुगे वर्षसहस्रगमनकथनम् | ४१-२५१ |
| जनमेजयस्य सर्पसत्रप्रतिज्ञा | ४३-२५९ |
| जनमेजयेन वैशम्पायनं प्रति विस्तरेण भारतकथाकथनप्रार्थना | ५१-२९९ |
| जम्बुकोपाख्यानम् | १३७-९०८ |
| जरत्कारोः स्वपितृभिस्सह संवादः | १०-१२५ |
| जरत्कारुविवाहः | १०-१२८ |
| जरत्कारोर्गर्ते लम्बमानस्वपितृदर्शनम् | ३७-२३३ |
| जरत्कारुपितृसंवादः | ३७-२३४ |
| जरत्कारोर्विवाहकरणे पितॄणां नियोगः | ३८-२३७ |
| जरत्कारुणा भार्यान्वेषणम् | ३८-२३८ |
| जरत्कारुविवाहः | ३९-२४० |
| जरत्कारोर्जरत्कार्वां गर्भसंभवः | ३९-२४१ |
| जरत्कार्वा उत्सङ्गे जरत्कारोश्शयनम् | ३९-२४२ |
| ज्येष्ठाया उत्पत्तिः | १३-१४० |
| डुण्डुभोपाख्यानम् | ८-११९ |
| डुण्डुभेन जनमेजयसर्पसत्रप्रस्तावः | ८-१२१ |
| तक्षककाश्यपसंवादः | ३४-२२४ |
| तक्षकेण दष्टस्य न्यग्रोधस्य काश्यपेन सञ्जीवनम् | ३५-२२७ |
| तक्षकाद्धनप्राप्त्या काश्यपस्य निवृत्तिः | ३५-२२८ |
| तक्षकेण कृमिभूतेन परीक्षितो दंशनम् | ३५-२३० |
| तक्षककाश्यपसंवादज्ञाने कारणकथनम् | ४२-२५६ |

| | अध्यायः-पुटम् |
|---|---|
| तक्षकेण इन्द्रशरणागतिः | ४४-२६४ |
| तक्षकपतनकाले अस्तीकेन यज्ञसमाप्तिवरयाचनम् | ४६-२७९ |
| ततो दीर्घतमोनाम्नो ऋषेरुत्पत्तिः | ९९-६४२ |
| तपस्यतो माण्डव्यस्याश्रमे दस्यूनां प्रवेशः | १०३-६६७ |
| तपोबलादमृतस्य तस्य राज्ञा सान्त्वनम् शूलान्मोचनञ्च | १०३-६६९ |
| योः परस्परं कोपेन लोके मर्यादास्थापनम् | ९९-६३३ |
| तुर्वसुनिकटे जरासङ्क्रामणप्रार्थना | ६८-४४२ |
| तुर्वशोर्जरामनङ्गीकुर्वाणस्य ययातिशापः | ६८-४४३ |
| दशमेऽहनि स्नातायाः कुन्त्या अङ्कात् व्याघ्रभयेन शिलायां भीमस्य पतनेन तस्याश्शतधा स्फोटः | ११०-७३१ |
| दानवैः कचस्य वधः | ६०-३९१ |
| दाशराजं प्रति शन्तनुना दाशकन्यादानप्रार्थनम् | ९४-६०७ |
| दाशेन स्वकन्याया वरदानयाचनम् | ९४-६०८ |
| दिग्गजाद्युत्पत्तिः | ५७-३६४ |
| दीर्घतमोनामकमुनेरुपाख्यानम् | ९९-६४० |
| दुःखिताया जरत्कार्वा उदरे गर्भोऽस्तीत्युक्तिः | ३९-२४५ |
| दुर्योधनजननम् | ११०-७३२ |
| दुर्योधनादीनां नामकथनम् | ११२-७३७ |
| दुर्योधनेन भीमस्य गङ्गापातनं सर्पदंशनं विषमिश्रभोज्यदानं च | ११९-७८९ |
| दुर्योधनेन कर्णस्य राज्याभिषेकः | १२९-८५४ |
| दुर्योधनेन भीमस्य प्रत्युत्तरदानम् | १३०-८५७ |
| दुर्योधनेन स्वपित्रे पाण्डवानां वारणावतप्रस्थापनकथनम् | १३६-९०२ |
| दुश्शासनादिजननम् | ११०-७३३ |
| दुश्शलापरिणयः | ११२-७३९ |
| दुष्यन्तसाम्राज्यवर्णनम् | ७९-४९४ |
| दुष्यन्तस्य मृगयार्थमरण्यगमनम् | ८०-४९६ |
| दुष्यन्तमृगयावर्णनम् | ८०-४९८ |
| दुष्यन्तस्य मृगयाप्रसङ्गेन कण्वाश्रमगमनम् | ८१-४९९ |

अध्यायः-पृष्ठम्

दुष्यन्तेन शकुन्तलाया निराकरणम् ८६-५५६
दुष्यन्तशकुन्तलाविवादः ८७-५५८
देवकृतगरुडस्तवः १७-१५३
देवगरुडयुद्धम् २४-१८३
देवदूतभाषणेन रुरोरायुषोऽर्धदानेन प्रमद्वराजीवनम् ८-११६
देवरूपधारिणोऽमृतं पिबतो राहोर्भगवता शिरश्छेदः १४-१४३
देवयान्या पितृसमीपं प्रति चूर्णिकाप्रेषणम् ६२-४०८
देवयान्याः प्रत्युत्तरम् ६३-४१२
देवयान्यास्सन्तोषेण पुरप्रवेशः ६४-४१८
देवयान्याः पुत्रोत्पत्तिः ६६-४२६
देवयान्या शर्मिष्ठापुत्रदर्शनम् ६७-४३५
देवयान्या कोपाच्छुक्रसमीपगमनम् ६७-४३८
देवयानीसमीपे शर्मिष्ठापुत्रैस्स्वपितृनामकथनम् ६७-४३६
देवयानीशर्मिष्ठाविवादः ६७-४३७
देवव्रतेन स्वपितुश्शोकनिमित्तज्ञानाय सारथिप्रश्नः ९४-६११
देवव्रतेन उच्चैश्श्रवोऽभिधदाशसमीपे पित्रर्थं कन्यायाचनम् ९४-६११
देवव्रतेन ब्रह्मचर्यप्रतिज्ञा ९४-६१४
देवव्रतस्य भीष्मनामप्राप्तिः ९४-६१५
देवानां गरुडेन पराजयः २४-१८५
देवानां गणकथनम् ५७-३५९
देवानां दानवानाञ्च भूमावंशावतारकथनम् ५८-३६६
देवानाममृतरक्षणोद्योगः २२-१७७
देवानामुत्पातदर्शनम् २२-१७५
देवासुरैर्वासुकियोक्त्रेण मन्दरेण समुद्रमथनम् १३-१३५
देवासुरयुद्धेऽसुराणां पराजयः १४-१४६
देवैस्सञ्जीविनीविद्याप्राप्तये बृहस्पतिसमीपं प्रति कचप्रेषणम् ६०-३८९
द्रुपदग्रहणाय पाण्डववर्जं गतानां कौरवाणां तेन पराजयः १३१-८६४
द्रुपदेन सह द्रोणस्य संवादः १३१-८७४

अध्यायः–पुटम्

द्रुपदेन द्रोणविजयाय पुत्रोत्पादनार्थं उपयाजगमनम् १३२–८७६
द्रुपदोत्पत्तिः १३३–८८६
द्रुह्युनिकटे जरासन्धक्रमणप्रार्थना ६८–४४३
द्रोणपर्ववृत्तान्ताध्यायश्लोकसंख्या २—६३
द्रोणस्योत्पत्तिः १२२–८०३
द्रोणस्य द्रुपदेन सहाध्ययनादि १२२–८०५
द्रोणस्य परशुरामादस्त्रप्राप्तिः १२२–८०७
द्रोणस्य द्रुपदं प्राप्य स्वसखित्वं वदतो द्रुपदकृतं भर्त्सनम् १२३–८०८
द्रोणसमीपं प्रति एकलव्यागमनम् १२५–८२७
द्रोणेन तस्यानङ्गीकारः १२५–८२७
द्रोणेन एकलव्याङ्गुष्ठस्य गुरुदक्षिणात्वेन ग्रहणम् १२५–८३०
द्रोणस्यार्जुनेन ग्राहान्मोचनम् १२६–८३६
द्रोणेन हास्तिनपुरगमनम् १२३–८१०
द्रोणेन जले पतिताया वीटाया उद्धरणम् १२३–८१२
द्रोणेन भीष्मादिभ्यः स्वपूर्ववृत्तान्तकथनम् १२४–८१५
द्रोणेन कृत्रिमभासेनार्जुनादीनां परीक्षा १२६–८३२
द्रोणेन जीवतो द्रुपदस्य ग्रहणे आज्ञापिते तदर्थं सर्वशिष्याणां पाञ्चालपुरगमनम् १३१–८६०
द्रोणेन राज्यार्धहरणेन द्रुपदायार्धराज्यदानम् १३१–८७४
द्रोणेनार्जुनाय सर्वश्रेष्ठत्वप्रापणप्रतिज्ञा १२५–८२५
द्रोणेनाश्वत्थामद्वारा भीमदुर्योधनयोर्गदायुद्धवारणम् १२८–८४४
द्रोणेनार्जुनस्य ब्रह्मशिरोऽस्त्रविषये नियमकथनम् १३४–८९१
द्विजेन उद्दालकं प्रति पुत्रार्थं भार्याप्रदानयाचनम् १०९–७१७
द्विजश्वेतकेतुविवादः १०९–७१८
द्वैपायनस्य व्यासनामप्राप्तिः ५३–३३७
धात्रेयिकायां ऋषिणा तेन एकादशपुत्रजननम् ९९–६४५
धृतराष्ट्रविवाहः १०४–६७६
धृतराष्ट्रस्य ब्राह्मणैर्मन्त्रणम् ११०–७३२

| | अध्यायः-पुटम् |
|---|---|
| धृष्टद्युम्नेन द्रोणादस्त्रशिक्षणम् | १३२-८८५ |
| धौम्यस्योपाख्यानम् | ३—७७ |
| पक्षिमृगादीनामुत्पत्तिः | ५७-३६३ |
| पराशरेण सत्यवतीदर्शनम् | ५३-३२५ |
| पराशरेण सत्यवतीपूर्ववृत्तान्तकथनम् | ५३-३२७ |
| पराशरेण नीहारसृष्टिः | ५३-३२९ |
| पराशरेण व्यासस्य सान्त्वनम् | ५३-३३५ |
| पराशरेण व्यासस्य जातकर्मादिसंस्कारकरणम् | ५३-३३७ |
| परीक्षिन्मृगयाकथनम् | ३२-२१३ |
| परीक्षिता शमीकस्कन्धे मृतसर्पनिक्षेपः | ३२-२१४ |
| परीक्षितो मन्त्रिभिरालोचनम् | ३४-२२४ |
| परीक्षिन्मरणम् | ३६-२३० |
| पर्वणां शतस्यानुपूर्व्येण कथनम् | २—४७ |
| पाण्डवानां नामकरणम् | ११४-७५३ |
| पाण्डवानां ऋषिभिस्सह हास्तिनपुरगमनम् | ११६-७७२ |
| पाण्डवादिभिः द्रोणादस्त्रशिक्षणम् | १२४-८२१ |
| पाण्डवादीनामस्त्रशिक्षापरीक्षार्थं रङ्गनिर्माणम् | १२७-८३८ |
| पाण्डवेषु लोकान्तरं गतेषु भारतप्रणयनकथनम् | १—१३ |
| पाण्डुना कुन्तीमाद्र्योर्विवाहः | १०६-६८७ |
| पाण्डुना कुन्त्यै पुरातनस्त्रीस्वरूपकथनम् | १०९-७१५ |
| पाण्डुना पुत्रार्थं कुन्तीप्रेरणम् | १०९-७२१ |
| पाण्ड्वनुमत्या वायोः कुन्त्यां भीमस्योत्पत्तिः | ११०-७२९ |
| पाण्डो राज्याभिषेकः | १०४-६७२ |
| पाण्डोर्दिग्विजयः | १०६-६८८ |
| पाण्डोर्वानप्रस्थाश्रमप्रवेशः | १०७-६९६ |
| पाण्डोर्वने तपश्चरणम् | १०७-७०२ |
| पाण्डोर्मरणम् | ११५-७६० |
| पाण्डोस्संस्कारः | ११५-७७१ |
| पाण्डोरस्थिसञ्चयनादिविधिः | ११७-७७९ |

| | अध्यायः-पुटम् |
|---|---|
| पाण्डोः श्राद्धदानम् | ११८-७८४ |
| पुनस्समुद्रमथनेन श्रान्तानां नारायणेन बलदानम् | १३-१४० |
| पुनरपि मन्त्रिभिर्जनमेजयाय विस्तरेण परीक्षिच्चरित्रकथनम् | ४२-२५३ |
| पुनस्तेन तस्य प्रसादनेन स्वमहिष्यां सुदेष्णायां अङ्गनामकराजर्षेरुत्पत्तिः | ९९-६४६ |
| पुत्रजनने पाण्डोश्चिन्ता | १०८-७०८ |
| पूरुवंशकथनम् | ५२-३०५ |
| पूरुणा ययातेर्जराङ्गीकारः | ६८-४४५ |
| पूरुणा ययातेर्वरलाभः | ६८-४४६ |
| पूरो राज्येऽभिषेकाय पौरब्राह्मणाद्यनुनयः | ६९-४४८ |
| पूरो राज्येऽभिषेकः | ६९-४५० |
| पूरुवंशस्य पुनः कथनम् | ७८-४९१ |
| पृथाया दुर्वाससो मन्त्रप्राप्तिः | १०५-६८१ |
| पृथाया बाल्यचरित्रकथनम् | १०५-६८० |
| पौष्येण स्वपत्नीं कुण्डले भिक्षस्वेति कथनम् | ३-८९ |
| पौष्यपत्नीतः कुण्डले गृहीत्वाऽऽगमने मध्येमार्गं तक्षकेण-कुण्डलहरणम् | ३-९२ |
| प्रमद्वरायास्सर्पदंशेन रुरोर्दुःखम् | ७-११४ |
| प्रथमं विषोत्पत्तिः | १३-१३७ |
| प्रतर्दनययातिसंवादः | ७६-४७९ |
| प्रतीपनामकराजोपाख्यानम् | ९०-५८१ |
| प्रतीपेन गङ्गायास्स्नुषात्वेन परिग्रहः | ९०-५८३ |
| प्रतीपान्महाभिषजश्शन्तनुत्वेनोत्पत्तिः | ९०-५८४ |
| बलिनाम्ना राज्ञा स्वपत्न्यां सन्तानार्थं तद्ग्रहणम् | ९९-६४५ |
| बलिमहिष्या तदनादरेण सन्तानाय धात्रेयिकायाः प्रेषणम् | ९९-६४५ |
| बालकस्य तिरोधानम् | ९३-६०४ |
| बृहस्पतिना तस्य शिशोश्शापः | ९९-६४२ |
| बैदस्य धौम्यशिष्यस्य उपाख्यानम् | ३-८५ |
| बैदशिष्यस्य उदङ्कस्य उपाख्यानम् | ३-८६ |

| | अध्यायः-पृष्ठम् |
|---|---|
| वैदेन गृहरक्षणाय उदङ्कमादिश्य प्रवासः | ३—८६ |
| ब्रह्मचर्याद्याश्रमप्रश्नप्रतिवचनम् | ७५-४७२ |
| ब्रह्मस्तुत्या अग्निना स्वशिखादीपनम् | ६-११० |
| ब्रह्मणस्स्तुत्या शिवेन गरलभक्षणम् | १३-१३८ |
| ब्रह्मणा काश्यपाय विषहणीविद्यादानम् | १५-१४९ |
| ब्रह्मणा देवान्प्रति अंशावतरणाज्ञा | ५५-३४९ |
| ब्रह्मणो धातृविधातादिजननम् | ५७-३६२ |
| ब्रह्मणो निदेशेन शेषस्य पृथिवीधारणाङ्गीकारः | २८-२०० |
| ब्रह्मलोकगन्तृभिः ऋषिभिरपुत्रस्य तत्र गतिर्नास्तीति पुत्राश्च तव भविष्यन्तीति पाण्डोः अनुगमननिषेधः | १०७-७०३ |
| भगवता देवानां समुद्रमथने नियमनम् | १२-१३३ |
| भरतचरितकथनम् | ८८-५६९ |
| भरतवंशकथनम् | ८८-५७० |
| भारतप्रशंसनम् | १—९ |
| भारतश्रवणादिफलकथनम् | ५१-३०१ |
| भीमदुर्योधनयोर्गदायुद्धपरीक्षा | १२७ ८४३ |
| भीमस्य नागलोकप्राप्तिः | १२०-७९४ |
| भीमस्य नागलोकादागमनम् | १२०-७९८ |
| भीमस्य बलरामाद्गदायुद्धशिक्षणम् | १३४-८९० |
| भीमेन धार्तराष्ट्राणां क्रीडनसमये परिभवनम् | ११९-७८७ |
| भीमेन नागलोके वासुकिदत्तरसपानम् | १२०-७९६ |
| भीमाय पुनरपि विषभोज्यदानं जलपातनम् | १२०-७९१ |
| भीमार्जुनदिग्विजयेन धृतराष्ट्रचिन्ता | १३४-८९४ |
| भीष्मपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६२ |
| भीष्मादीनां पाण्डवादीनां च सङ्ग्रहेण जन्मकथनम् | ५४-३३९ |
| भीष्मेण विचित्रवीर्यस्य राज्येऽभिषेकः | ९५-६१८ |
| भीष्मेण वाराणसीगमनम् | ९६-६१९ |
| भीष्मेण काश्यां राज्ञां पराजयः | ९६-६२५ |
| भीष्मेण तदनङ्गीकारः | ९८-६३९ |

अध्यायः—पुटम्.


भीष्मं प्रति सत्यवत्या स्वस्यां कन्यात्वावस्थायां व्यासजन्म-
कथनम् १०१–६५०
भीष्मादीनां पाण्डवदर्शनाय गमनम् ११६–७७४
भुवो भारेण दुःखिताया ब्रह्मसमीपगमनम् ५५–३४७
भूभारहरणाय इन्द्रेण नारायणप्रार्थना ५५–३४९
भृगुवंशकथनम् ४–१०२
भृगुपत्न्याः पुलोमाया हरणाय रक्षस आगमनम् ४–१०३
भृगुपुलोमयोस्संवादः ५–१०७
भृगुणाऽग्नेस्सर्वभक्षत्वशापः ५–१०७
भृगोर्जन्मवंशकथनम् ६७–३६१
मत्स्यरूपाया अद्रिकायाश्शापमोक्षः ६३–३२५
मन्त्रप्रभावेन सूर्यात् कुन्त्यां कर्णस्योत्पत्तिः १०५–६८३
मन्त्रिभिर्जनमेजयाय परीक्षिच्चरित्रकथनम् ४१–२४८
महाभारतप्रशंसा १—४१
महाप्रस्थानिकपर्ववृत्तान्ताध्यायश्लोकसंख्या २—७२
महाभिषजः ब्रह्मणा शापः ८९–५७९
महाभिषगुपाख्यानम् ८९–५७८
मातृशापपरिहाराय सर्पाणामालोचनम् २९–२०२
मात्स्यस्य राज्ञ उत्पत्तिः ५३–३२५
माधव्या वसुमनसा सह संवादः ७७–४८६
माण्डव्यचरित्रकथनम् १०३–६६६
माद्र्यां नकुलसहदेवजननम् ११४–७४९
माद्र्यनुगमनम् ११५–७७१
मीनभावं प्राप्ताया अद्रिकेत्यप्सरसः सत्यवत्या उत्पत्तिः ५३–३२५
मृगयार्थं गतस्य शन्तनोर्गङ्गया संवादः ९०–५८७
मृगयार्थमरण्यं गतस्य पाण्डोः किन्दमेन शापः १०६–६९२
मोहिनीरूपधारिणा विष्णुना देवानाममृतदानम् १३–१४२
मौसलपर्ववृत्तान्ताध्यायश्लोकसंख्या २—७०
यज्ञसेनेन शिखण्डिन्या विवासनम् ९७–६३४

अध्यायः-पुटम्
यज्ञायतननिर्माणकाले स्थपतिना सत्रविघ्नः स्यादिति कथनम् ४३-२६१
यदाऽश्रौषमित्यादिना सङ्ग्रहेण तत्कथाकथनम् १—२३
यदुना जराऽनङ्गीकारेण तस्य ययातिशापः ६८-४४२
यदुप्रभृतीनां वंशकथनम् ६९-४५०
ययात्युपाख्यानसङ्ग्रहः ५९-३८४
ययातिचरित्रोपक्रमः ६०-३८७
ययातिना कूपे देवयान्या दर्शनं भाषणं च ६२-४०५
ययातिना देवयान्याः कूपादुद्धरणम् ६२-४०७
ययातेस्स्वपुरगमनम् ६२-४०७
ययात्यष्टकादीनां स्वर्गगमनम् ७७-४८८
ययातिना पुनर्देवयानीदर्शनम् ६५-४१९
ययातिदेवयानीसंवादः ६५-४२०
ययातिना शुक्रसान्त्वनम् ६७-४४०
ययातिना यदुनामज्येष्ठपुत्रनिकटे स्वजरासङ्क्रामणप्रार्थना ६८-४४१
ययातिना द्रुह्योश्शापः ६८-४४४
ययातिनाऽनोश्शापः ६८-४४५
ययातिना पुनः पूरुतः स्वजराग्रहणम् ६९-४४८
ययातेश्शर्मिष्ठया विवाहः ६६-४३१
ययातेश्शर्मिष्ठायां पुत्रोत्पत्तिः ६६-४३२
ययातेश्शुक्राज्जराप्राप्तिशापः ६७-४३९
ययातेः पूरुसमीपे स्वजरासङ्क्रामणप्रार्थना ६८-४४५
ययातेर्विषयानुभवेन वैराग्यप्राप्तिः ६९-४४७
ययातेर्वनगमनम् ६९-४५०
ययातेः स्वर्गगमनम् ७०-४५१
ययातेस्स्वर्गतः पतनम् ७२-४५७
ययातेः स्वनामकथनपूर्वकमष्टकेन सह संवादः ७३-४६०
ययातेरष्टकसमीपे स्ववृत्तान्तकथनम् ७३-४६४
याजेन द्रुपदस्य वैतानाग्नौ धृष्टद्युम्नपाञ्चाल्योरुत्पादनम् १३२-८८२

अध्यायः-पुटम्
युधिष्ठिरादीनामायुर्भावकथनम् १९५–७५७
युधिष्ठिरादीनां प्रलापः १९५–७६४
युधिष्ठिरादिभिर्भीमस्यान्वेषणम् १२०–७९७
युधिष्ठिरस्य यौवराज्येऽभिषेकः १३४–८९०
युधिष्ठिरादीनां परीक्षा १२७–८४२
युधिष्ठिरस्साम्राज्येऽभिषेक्तव्य इति पौरवार्तां श्रुत्वा व्यथितस्य दुर्योधनस्य पित्रा संवादः १३५–८९६
रक्षसा पुलोमा कस्य भार्येत्यग्नेरभिचोदनम् ४–१०४
रक्षसा वराहरूपेण पुलोमाया अपहारः ५–१०६
रक्षिभिश्चोरैस्सह माण्डव्यस्यापि राज्ञे निवेदनञ्च १०३–६६७
राज्ञः ऋषिणा विवादः ९९–६४५
राज्ञा तस्य शूले वध्यताज्ञापनम् १०३–६६८
रुरुचरितम्-मेनकायां प्रमद्वरोत्पत्तिः ७–११२
रुरुप्रमद्वरयोर्विवाहप्रसङ्गः ७–११३
रुरोर्विवाहः ८–११८
रुरुणा सर्पहननप्रतिज्ञा ८–११८
रुरुडुण्डुभसंवादः ८–११८
लोकभयात् कुन्त्या यमुनायां विसृष्टस्य शिशोः राधाभर्त्रा स्वीकारो वसुषेण इति नामकरणञ्च १०५–६८४
वने मृगयार्थमटता जनमेजयेन श्रुतश्रवसो दर्शनम् ३—७६
वसिष्ठशापात्पुत्रत्वेन जातानामष्टवसूनां सङ्ग्रहेण जन्मवृत्तकथनम् ९१–५९३
वसिष्ठेन धेनोरदर्शनेन वसूनां शापः ९२–५९८
वसुगङ्गासंवादः ९२–५९९
वसुतत्पत्नीसंवादः ९२–५९७
वसुना इन्द्रध्वजोत्सवकरणम् ५३–३१८
वसुना पौष्यस्य सेनापतित्वकरणम् ५३–३२२
वसुना स्वपितृनियोगेन मृगयार्थं वनगमनम् ५३–३३२
वसुप्रार्थनया प्रसन्नेन वसिष्ठेन वसुशापमोक्षकथनम् ९२–५९९
वसुभार्यया कयाचित् कामधेनुदर्शनम् ९२–५९६

| | अध्यायः-पुटम् |
|---|---|
| वसुभिर्वसिष्ठगोहरणम् | ९२-५९७ |
| वसुमनसः ययातिना संवादः | ७७-४८२ |
| वसूनां गङ्गायाश्च संवादः | ८९-५७९ |
| वसोर्गिरिकया विवाहः | ५३-३२२ |
| वालखिल्यतपोबलेन गरुडोत्पत्तिकथनम् | २३-१७९ |
| वासुकिसमीपे जरत्कारोस्समयकरणम् | ३८-२३९ |
| वासुकिना स्वभगिनीं प्रति अस्तीकस्य सत्रसमापनप्रेरणम् | ४४-२६५ |
| वासुकेस्सर्पराजत्वाभिषेकः | २८-२०१ |
| वासुकेर्जरत्कार्वा सह संवादः | ४०-२४६ |
| विचित्रवीर्यमरणम् | ९८-६३६ |
| विदुरविवाहः-तस्य पुत्रोत्पत्तिश्च | १०७-७०५ |
| विनतया गरुडाय ब्राह्मणवर्जं समुद्रमध्यस्थनिषादभक्षणेऽनुज्ञा | २०-१६३ |
| विनतया गरुडाय आशीर्वचनम् | २०-१६४ |
| विनताया अण्डप्रभेदनेनारुणेन पुत्रेण शापः | ११-१३१ |
| विनतायां गरुडजननम् | ११-१३२ |
| विनतया पणबन्धे कद्र्वा जितया कद्रूदास्याङ्गीकारः | १७-१५२ |
| विनतागरुडाभ्यां कद्रूसर्पवहनम् | १८-१५८ |
| विनताया दास्यमोचनम् | २६-१९३ |
| विराटपर्वसंक्षेपवृत्तान्ताध्यायश्लोकसंख्या | २-५९ |
| विश्वामित्रान्मेनकायां शकुन्तलाया जन्मकथनम् | ८३-५१४ |
| विषदाहेन देवासुरापाक्रमणम् | १३-१३७ |
| विष्णुगरुडसमागमः | २५-१८८ |
| विष्णोर्गरुडाद्वरप्राप्तिः | २५-१८९ |
| विस्तरेण अस्तीकाख्यानश्रवणाय शौनकप्रश्नः | ११-१२९ |
| वृक्षलतादीनामुत्पत्तिः | ५७-३६५ |
| वृषपर्वणा देवयानीप्रसादनम् | ६४-४१६ |
| वृष्णिभिर्वसुदेवमन्त्रणेन काश्यपपुरोहितप्रेषणम् | ११४-७५४ |
| वैशम्पायनेन जनमेजयाय सङ्ग्रहेण भारतकथाकथनम् | ५०-२९२ |
| वैशम्पायनेन भारतप्रशंसनम् | ५१-३०० |

अध्यायः-पुटम्

व्यासेन जनमेजयाय वैशम्पायनं प्रति भारतकथाकथनचोदना ४९-२९१
व्यासोत्पत्तिः ५३-३३०
व्यासेन मातुर्निराकरणं ५३-३३४
व्यासेनाम्बिकाम्बालिकयोः पुत्रोत्पादनाङ्गीकारः १०१-६५७
व्यासादम्बिकायां धृतराष्ट्रस्योत्पत्तिः १०२-६६१
व्यासेन वरदानाद् गान्धार्यां धृतराष्ट्रात्पुत्रोत्पत्तिः १०८-७०६
व्यासोक्त्या सत्यवत्या स्नुषाभ्यां सह तपोवनगमनम् ११८-७८४
व्युषिताश्वोपाख्यानम् १०८-७११
व्युषिताश्वेन मृतेन स्वपत्नीप्रलापेन मृतशरीरेणैव स्वपत्न्यै पुत्रदानम् १०८-७१४
शकुन्तलोपाख्यानारम्भः ७८-४९४
शकुन्तलया स्वजन्मवृत्तान्तकथनारम्भः ८२-५१०
शकुन्तलायास्समयबन्धपूर्वकं गान्धर्वेण विवाहेन दुष्यन्तेन पाणिग्रहणम् ८४-५१८
शकुन्तलाकण्वसंवादः ८४-५२५
शकुन्तलायाः पुत्रोत्पत्तिः ८५-५२९
शकुन्तलापुत्रस्य सर्वदमनेतिनामप्राप्तिः ८५-५३२
शकुन्तलाया दुष्यन्तपुरप्रवेशः ८५-५४२
शकुन्तलायास्सपुत्राया दुष्यन्तसमीपगमनम् ८६-५४३
शकुन्तलादुष्यन्तयोस्संवादः ८६-५४५
शकुन्तलया सूक्ष्मधर्मकथनम् ८६-५४७
शकुन्तलाप्रस्थानारम्भः ८७-५६४
शकुन्तलाया दुष्यन्तेनाङ्गीकारः ८८-५६६
शकुन्तलापुत्रस्य भरतेतिनामकरणमभिषेकश्च ८८-५६९
शतधा भूताया मांसपेश्याः व्यासेन घृतपूर्णकुण्डशते निक्षेपः ११०-७२७
शन्तनो राज्येऽभिषेकः ९०-५८५
शन्तनोर्गङ्गया समयपूर्वकं विवाहः क्रीडनञ्च ९०-५९०
शन्तनुगुणवर्णनम् ९३-६०१
शन्तनुना मृगयार्थं वनगमने गङ्गासमीपगमनम् ९३-६०३

| | अध्यायः-पुटम् |
|---|---|
| शन्तनुना देवव्रतस्य यौवराज्येऽभिषेकः | ९३-६०६ |
| शन्तनुना दाशकन्यादर्शनम् | ९४-६०७ |
| शन्तनुना वरदानानङ्गीकरणम् | ९४-६०८ |
| शन्तनुना भीष्माय स्वच्छन्दमरणवरदानम् | ९४-६१६ |
| शन्तनुसत्यवत्योर्विवाहः | ९५-६१६ |
| शन्तनोस्सत्यवत्यां चित्राङ्गदविचित्रवीर्ययोरुत्पत्तिः | ९५-६१६ |
| शन्तनोर्मरणम् | ९५-६१७ |
| शन्तनुना कृपस्य कृप्याश्च पोषणम् | १२१-८०१ |
| शमीकपुत्रस्य शृङ्गिनामकस्य कृशेन संवादः | ३२-२१५ |
| शमीकेन स्वपुत्रभर्त्सनम् | ३३-२१८ |
| शमीकेन शृङ्गिणो धर्मोपदशः | ३४-२२० |
| शमीकेन परीक्षिते गौरमुखाख्यशिष्यप्रेषणम् | ३४-२२२ |
| शर्मिष्ठया देवयान्याः कूपे पातनम् | ६२-४०५ |
| शर्मिष्ठादेवयान्योर्वस्त्रप्रयुक्तो विरोधः | ६२-४०४ |
| शर्मिष्ठया देवयानीदास्याङ्गीकारः | ६४-४१७ |
| शर्मिष्ठाययातिसंवादः | ६६-४२८ |
| शर्मिष्ठादेवयान्योः पुत्रार्थं पुनस्संवादः | ६७-४३३ |
| शर्मिष्ठादेवयान्योः पुनः पुत्रोत्पत्ति | ६७-४३४ |
| शर्यातिपुत्राच्छुकात् पाण्डवैर्धनुर्वेदशिक्षणं | ११४-७५५ |
| शल्यपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६५ |
| शान्तिपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६७ |
| शिबेर्ययातिना संवादः | ७७-४८३ |
| शिखण्डिन्या इषीकब्राह्मणं प्रति शरणगमनम् | ९७-६३४ |
| शिखण्डिना ततः पुरागमनम् | ९७-६३५ |
| शिक्षादर्शनार्थं भीष्मादीनां प्रेक्षागारप्रवेशः | १२७-८४० |
| शुक्रदेवयानीसंवादः | ६०-३९४ |
| शुक्रदेवयानीसंवादः | ६२-४०९ |
| शुक्रेण सुरापाननिषेधः | ६०-३९८ |
| शुक्रेण देवयानीसान्त्वनम् | ६३-४१० |

अध्यायः–पुटम्

| | |
|---|---|
| शुक्रवृषपर्वणोस्संवादः | ६४–४१४ |
| शुक्रेण ययातिदेवयानीसमीपागमनम् | ६५–४२४ |
| शुक्राज्ञया ययातेः देवयान्या विवाहः | ६५–४२५ |
| शुक्रसमीपे देवयानीवाक्यम् | ६७–४३८ |
| शुक्राद्ययातेर्वरप्राप्तिः | ६७–४४० |
| शृङ्गिणा परीक्षितः शापः | ३३–२१६ |
| शेषस्य ब्रह्मणो वरप्राप्तिः | २८–२०० |
| श्रुतश्रवसः पुत्रस्य सोमश्रवसः जनमेजयेन पापकृत्यानिवारणाय पौरोहित्ये वरणम् | ३–७६ |
| श्वेतकेतुना स्त्रीपुंसयोर्मर्यादास्थापनम् | १०९–७२० |
| सङ्ग्रहेण भारतकथाकथनम् | १–१९ |
| सङ्ग्रहेण जरत्कारोरुपाख्यानम् | १०–१२४ |
| सङ्ग्रहेण अस्तीकेन सर्परक्षणकथनम् | १०–१२८ |
| सञ्जयेन धृतराष्ट्राश्वासनम् | १–३७ |
| सत्यवत्या दाशशुश्रूषा | ५३–३२५ |
| सत्यवतीपराशरसंवादः | ५३–३२६ |
| सत्यवत्याः पराशराद्वरलाभः | ५३–३३० |
| सत्यवत्याः पराशरेण संसर्गः | ५३–३३० |
| सत्यवतीव्याससंवादः | ५३–३३६ |
| सत्यवत्याः भीष्मेण सह सन्तानाय संवादः | १००–६४७ |
| सत्यवत्याः व्यासेन सह संवादः | १०१–६५५ |
| सभापर्वसंक्षेपवृत्तान्ताध्यायश्लोकसंख्या | २–५५ |
| समयोल्लङ्घनेन क्रुद्धस्य मुनेस्तपोऽर्थं गमनम् | ३९–२४४ |
| समन्तपञ्चकाख्यानकथनम् | २–४४ |
| सरमया जनमेजयस्य शापः | ३–७५ |
| सर्पसत्रे हतानां नागानां नामकथनम् | ४७–२८० |
| सर्पैर्गरुडस्य पुनर्देशान्तरवहनचोदना | २०–१६२ |
| सर्पसमीपादिन्द्रेणामृतहरणम् | २६–१९३ |
| सर्पाणां द्विजिह्वत्वप्राप्तिः | २६–१९४ |

| | अध्यायः–पृष्टम् |
|---|---|
| सर्पनामकथनम् | २७–१९५ |
| सर्पसत्रोपक्रमः | ४३–२६० |
| सर्पसत्रे ऋत्विगादीनां नामकथनम् | ४४–२६३ |
| सर्पसत्रेऽद्भुतचर्या | ४८–२८३ |
| सर्पसत्रसमाप्तिः | ४८–२८४ |
| सर्वेषां रङ्गान्निष्क्रमणम् | १३०–८५९ |
| सारमेयस्य जनमेजयभ्रातृभिस्ताडनम् | ३—७४ |
| सारथिना शन्तनोः दाशकन्याभिलाषकथनम् | ९४–६११ |
| साल्वेनाम्बाया निराकरणम् | ९६–३२९ |
| सूतेन नैमिशारण्ये शौनकस्य द्वादशवार्षिकसत्रगमनम् | १—६ |
| सूतेन भगवत्प्रणामपूर्वकं तत्कथनाङ्गीकारः | १—९ |
| सूतशौनकसंवादः | ४–१०१ |
| सूर्यतापेन सर्पाणां मूर्छनम् | १८–१५८ |
| सूर्यास्तमनकाले धर्मलोपभयाज्जरत्कारोरुत्थापनम् | ३९–२४२ |
| सूतस्य भारतकथाकथनप्रतिज्ञा | ४९–२८८ |
| सृष्टेस्संक्षेपतः कथनम् | १—१० |
| सौप्तिकपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६५ |
| स्तोत्रेण जनमेजयादीनां सन्तोषः | ४५–२७४ |
| स्त्रीपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—६७ |
| स्वर्गारोहणपर्ववृत्तान्ताध्यायश्लोकसंख्या | २—७२ |
| स्वर्गाच्च्युतस्य ययातेरष्टकादियज्ञभूमिप्रत्यागमनकारणकथनम् | ७६–४७६ |
| स्थूलकेशेन महर्षिणा प्रमद्वरापालनम् | ७–११३ |
| हरिवंशस्वरूपकथनम् | २—७२ |
| हिमालये गरुडेन शाखात्यागः | २२–१७५ |
| होत्रा तक्षकसहितस्येन्द्रस्याह्वानम् | ४६–२७७ |

॥ श्रीरस्तु ॥

## ॥ अशुद्धशोधनम् ॥

यत्र यत्राचः पूर्वं हलः पूर्वं वा अनुस्वारो दृश्यते तत्र तत्रा-नुस्वारस्थाने पवर्गपञ्चमः (म्) तद्वर्गपञ्चमो वा इति ज्ञेयम् ॥

| पृष्ठम् | श्लोकः | पंक्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| १२ | पा* | १९ | अधायिरे | अधीयिरे |
| १९ | १०४ | ७ | कुच्छ्रां | कृच्छ्रां |
| २२ | १३२ | १२ | भीष्म | भीष्मं |
| २५ | १४८ | १ | सहस्रे | सहस्रै |
| ३४ | १९० | ४ | दुःशासनं | दुश्शासनं |
| ३७ | २०८ | १६ | अस्मिलोके | अस्मिँल्लोके |
| ५२ | ७७ | ७ | जन्मोच्चैः श्रव | जन्मोच्चैश्श्रव |
| ५८ | १२९ | ४ | पुत्रार्थमजयद्राजा | पुत्रार्थमयजद्राजा |
| ५८ | १३० | ७ | वयः | वधः |
| ८० | ५० | १३ | पिबंति | पिबति |
| ८९ | ११७ | ९ | संन्निहिता | सन्निहिता |
| १०१ | पा | २१ | वक्ष्यामि | वक्ष्यासि |
| ११२ | ३ | ८ | भवत् | भवः |
| ११२ | ६॥ | १६ | विप्रर्षेर् | विप्रर्षे |

* पाठभेदभागे (Footnote)

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ११५ | पा | १८ | निभक्षणा | निभेक्षणा |
| १२० | — | १ | डुन्डुभः | डुण्डुभः |
| १२० | ३५ | ९ | तथा वीर्यो | तथावीर्यो |
| १२२ | ५४॥ | १४ | सो ऽस्तिकस्य | सोऽस्तीकस्य |
| १२५ | ९ | ६ | मूषिकेन | मूषिकेण |
| १३० | ६ | ७ | पितमह | पितामह |
| १३१ | १२ | १ | गर्भौ इत्युक्त्वा | गर्भाविस्युक्त्वा |
| १३४ | १३ | १२ | सर्वोषधीः | सर्वौषधीः |
| १४७ | वि* | १२ | क्वद्रू | कद्रू |
| १५६ | पा | १९ | पिबत् | पिबन् |
| १५९ | पा | १८ | मासा | मासाः |
| १६३ | १०॥ | ३ | सर्पान् तेन | सर्पांस्तेन |
| १८४ | ६ | ८ | तेनावकीर्णो | तेनावकीर्णा |
| १८७ | — | ६ | सप्तदशोऽध्यायः १७ | षोडशोऽध्यायः १६ |
| १८८ | ८ | ८ | पंयकालयत् | पर्यकालयत् |
| १९८ | २ | १ | शेषः | शेषस् |
| २०९ | पा | १८ | नागरजो | नागराजो |
| २१३ | ११॥ | ८ | बोणन | बाणेन |
| २२४ | ३१ | ७ | ब्रा ह्मणान् | ब्राह्मणान् |
| २४१ | ७ | २ | कूर्मं पराध्यां | कूर्मं पराध्यां |
| २४८ | पा | १८ | शौनक | शौनकः |

* विषयसूचिकायाम्

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| २५२ | २४॥ | २ | वयस्थश्च | वयस्स्थश्च |
| २५३ | वि | १ | परीक्षिन्मन्त्रिसंवादः | जनमेजयमन्त्रिसं- |
| २५८ | ३९॥ | २ | दृष्ट्वा च | दृष्ट्वा च [वादः |
| २६० | १३ | १६ | विधिवत् | विधिवद् |
| २७२ | ३९ | १३ | शिष्या | शिष्याः |
| २७८ | १९॥ | १५ | तीव्रन्निश्वासान् | तीव्रान्निश्वासान् |
| २८२ | ११ | ४ | श्रुणु | शृणु |
| २८२ | १३ | ७ | श्रुणु | शृणु |
| २९१ | ३१ | १७ | तद्वचन | तद्वचनं |
| २९६ | ३३ | १२ | वसुन्धराम् | वसुन्धरा |
| ३३१ | पा | ८ | श्रोतस्यैव | श्रौतस्यैव |
| ३३१ | पा | ११ | ग्धर्मा | ग्धर्म |
| ३५० | ३ | १० | क्रमेणेयं | क्रमेणेमां |
| ३६३ | ६०॥ | १७ | व्वजायत | व्यजायत |
| ३६५ | ७४ | ८ | पुथक् | पृथक् |
| ३७१ | ४० | ४ | प्रथिव्यां | पृथिव्यां |
| ३७४ | ६८॥ | ८ | बृहत्कीर्तिर् | बृहत्कीर्तेर् |
| ३७७ | ९४॥ | ५ | राजं | राजन् |
| ३८० | पा | १५ | तेजोदुर्बल | तेजोपुर्बल |
| ३८५ | ४३॥ | १६ | परिहीनो | परिहीणो |
| ३९८ | ६८ | २ | पापां लोकांस्ते | पापाँल्लोकांस्ते |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ४१२ | १३ | ७ | विफथं | विपथं |
| ४१४ | वि | २ | शर्मिष्टय्या | शर्मिष्ठया |
| ४२३ | २८॥ | ८ | नाहुषाऽयं | नाहुषायं |
| ४२४ | ३६॥ | ९ | ब्रह्यकल्प | ब्रह्मकल्प |
| ४२४ | ३९ | १४ | पृथवी | पृथिवी |
| ४३१ | ४१ | ९ | भार्गवि | भार्गवी |
| ४३१ | — | २ | वैशम्पायनः— | शर्मिष्ठा |
| ४४२ | ५ | २ | दीना | दीनो |
| ४५६ | १८ | ३ | ह्यलक्ष्री | ह्यलक्ष्मी |
| ४५९ | ११ | १२ | समानुरूप | समानरूप |
| ४६२ | ९ | १० | स दैव | सदैव |
| ४७२ | १ | १६ | संनिविष्टो | सन्निविष्टः |
| ४८५ | १३ | ५ | कस्येतै | कस्यैते |
| ४८९ | ४१॥ | ६ | सर्वथ | सर्वथा |
| ४८९ | ४४॥ | १९ | कोतुकादि | कौतुकादि |
| ४९१ | ५१ | ५ | लभेन्नस्सर्व | लभेन्नरस स |
| ४९२ | ७ | १२ | वसुनाभ च | वसुनाभं च |
| ५०० | १॥ | १ | मालोकयामास | मालोडयामास |
| ५०२ | २४ | ९ | त च | तं, च |
| ५०४ | ४१॥ | १२ | अथर्वभिः ऋ | अथर्वभिर्ऋ |
| ५०८ | १२॥ | ३ | भगवां भद्रे | भगवान् भद्रे |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ५१२ | ४८ | १४ | कथमाक्ष्याति | कथं मोक्ष्यति |
| ५२१ | २१ | ९ | मम जायते | मम जायेत |
| ५२४ | ४५ | ९ | ऽशक्रोद् | ऽशाक्रोद् |
| ५३१ | २६ | ८ | महावलः | महाबलः |
| ५३१ | पा | १७ | आरुराहे | आरुरोह |
| ५३८ | ८०॥ | ५ | द्वतीय | द्वितीय |
| ५४२ | ११॥ | ४ | पिपासार्दितान् | पिपासार्दितान |
| ५४८ | ४५॥ | १२ | मावमंस्था | मावमंस्थाः |
| ५५० | पा | १८ | यनि | यानि |
| ५५१ | ६९ | ९ | स्वदारांस्तुष्यभ्ति | स्वदारांस्तुष्यन्ति |
| ५६४ | वि | ३ | तद्वंश्कथनं च | तद्वंशकथनं च |
| ५६९ | पा | २० | दंत्वा | दत्त्वा |
| ५७१ | ५२ | २ | मुचकुन्द्यं वै | मुचकुन्द्यो वै |
| ५७२ | ६१ | ६ | जन्ह्रोः | जह्नोः |
| ५८३ | ११॥ | ६ | वामोरुं | वामोरु |
| ५९७ | २६ | ११ | कंथचन | कथञ्चन |
| ५९९ | ४४॥ | ११ | सर्वान् जगाम | सर्वान्‌ जगाम |
| ६१५ | ७३ | १३ | भामिनीं | भामिनीम् |
| ६१७ | ११॥ | १९ | नद्या | नद्याः |
| ६२१ | २१ | ११ | समुत्पतु | समुत्पेतु |
| ६२३ | ३५॥ | ३ | अमहाबाहुः | महाबाहुः |

| पृष्ठम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ६२९ | ९१ | ११ | नाहमुद्वाहयष्ये | नाहमुद्वाहयिष्ये |
| ६३३ | १६॥ | ११ | स्रज | स्रजं |
| ६४० | ५ | १९ | निशाम्य | निशम्य |
| ६४२ | १५ | २ | औचय्ये | औचय्यो |
| ६४५ | ४३ | १० | पृत्राने | पुत्राने |
| ६४५ | ४४ | १३ | मैमत | ममैत |
| ६५८ | ५४ | ९ | बुीद्धं | बुद्धिं |
| ६६५ | पा | १७ | इत्यूक्त्वा | इत्युक्त्वा |
| ६७३ | पा | १९ | ग—यूप | घ—यूप |
| ६७३ | पा | २० | ग—परि | घ—परि |
| ६७७ | पा | २० | इदमन्वितम् | इदमनन्वितम् |
| ६७७ | ४७ | १७ | गान्घारी | गान्धारी |
| ६८२ | पा | ८ | कुन्ति | कुन्ती |
| ६८५ | ३४॥ | ९ | शक्रोऽम्यवमन्त्रणे | शक्रोम्यवमन्त्रणे |
| ६८७ | ५॥ | १५ | भीप्मः | भीष्मः |
| ६९१ | ३६ | ४ | संतत | सततं |
| ६९७ | १५ | १८ | त्यक्तं नित्यं | त्यक्तुं नित्यं |
| ७०८ | २४ | १८ | नाते | नोत |
| ७४० | ९॥ | १५ | पुत्र | पुत्रं |
| ७४० | १० | १६ | सुहृद्भ्रयश्च | सुहृद्भ्यश्च |
| ७४७ | ६३ | ९ | स्त्वेनम् वस्त्रेण | स्त्वेनं वस्त्रेण |

| पृष्ठम् | पङ्क्तिः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ७४८ | ७०॥ | ३ | वर्वन्ते | वर्तन्ते |
| ७४९ | वि | ११ | शुक्राद् | शुकाद् |
| ७५९ | १४॥ | ४ | बहूभिः | बहुभिः |
| ७७३ | ४ | ६ | शुक्रः | शुकः |
| ७८३ | पा | २० | सर्वांस्ताः | सर्वास्ताः |
| ७८८ | १४ | ५ | मध्यमं | मध्यमः |
| ७९० | ३२ | ८ | भुङ्क्त्वा | भुक्त्वा |
| ७९३ | पा | १८ | भक्ष्यानि | भक्ष्याणि |
| ७९३ | पा | १८ | भोज्यापूपाणि | भोज्यापूपानि |
| ७९५ | ३२॥ | ७ | संवृत्तः | संवृत्तश् |
| ७९७ | ५० | १० | वरोचितः | वने चितः |
| ७९८ | पा | १९ | [1]— | [1] घ—कोशे |
| ८०३ | पा | १२ | साक्षात् | साक्षाद् |
| ८१२ | पा | १९ | अङ्गलीयं | अङ्गुलीयं |
| ८१४ | १३ | ३ | वेत्स्यामीषिकया | वेत्स्यामीषीकया |
| ८१९ | ५० | ३ | अब्रुवं | अब्रवम् |
| ८१९ | पा | २१ | मुदीर्णनां | मुदीर्णानां |
| ८२० | पा | २३ | वुद्ध्वा | बुद्ध्वा |
| ८४७ | पा | १८ | सिह्म | सिंह |
| ८५५ | १ | २० | प्राणस्ख | प्राणस्स्ख |
| ८५७ | पा | २३ | दुयोंधनः | दुर्योधनः |

| पुटम् | श्लोकः | पङ्क्तिः | अशुद्धम् | शोधनम् |
|---|---|---|---|---|
| ८६० | १ | ८ | प्रसमीऽक्ष्यतु | प्रसमीक्ष्य तु |
| ८६० | पा | २१ | पञ्चवदनोः | पञ्चवदनो |
| ८६१ | पा | ११ | सोऽभिद्रुताद्धरं | सोऽभिद्रुतो हरं |
| ८६५ | २५॥ | १२ | र्विकर्ण | त्विकर्ण |
| ८७२ | पा | १० | अङ्गुलं | अङ्गुलिं |
| ८७२ | पा | २३ | धाष्ट्र्यं | धार्ष्ट्यं |
| ८८० | ३०॥ | ६ | द्रोणस्तस्था | द्रोणस्तथा |
| ८८० | पा | १५ | स्याद्द्रोण | स्याद्द्रोण |
| ८८७ | पा | २१ | नैपुष्यं | नैपुण्यं |
| ८८८ | १३ | १० | च्चाद्रात | च्चाद्रात् |
| ८८९ | १७॥ | ३ | सङ्गान् | साङ्गान् |
| ८९२ | पा | २० | पुन र्यानवा | पुनर्मानवा |
| ८९८ | १० | ३ | मुपाद्रवत् | मुपाद्रवत् |
| ८९९ | पा | ८ | सुसमुत्थितः | सुसमुत्थितम् |
| ९०० | पा | २३ | गान्धारिः | गान्धारिः |
| ९०० | पा | २५ | जिजृम्भ | जजृम्भ |
| ९०३ | ६ | १ | हस्युम्स | हन्युस्स |
| ९०४ | — | ११ | धृतराष्ट्र | धृतराष्ट्रः— |
| ९०६ | ५॥ | ६ | पक्षान् छिन्द्यात् | पक्षांश् छिन्द्यात् |
| ९१२ | ५१ | १८ | ब्राह्मणा | ब्राह्मणा |
| ९१५ | पा | १८ | मन्नो | मन्त्रो |

Printed by V. Ramaswamy Sastrulu & Sons at 'Vavilla' Press, Madras.